- तटः तटी तटं, पात्री पुटी (ದೊನ್ನೆ), वाटी (ತೋಟ), पेटी (ಪೆಟ್ಟಿಗೆ), कुवल, दाडिम। ಇವೂ ಅಲ್ಲದೆ ಇನ್ನೂ ಕೆಲವು ಇರುತ್ತವೆ.

4) ಒಂದೇ ವಾಕ್ಯದಲ್ಲಿ ಪು. ಸ್ತ್ರೀ. ಮತ್ತು ನ.ಲಿಂಗದ ನಂತರ ಬರುವ ವಿಶೇಷಣವು ಅಥವಾ ಸರ್ವನಾಮವು ನಪುಂಸಕಲಿಂಗದಲ್ಲಿರುತ್ತದೆ. ಉದಾ- भारते नदी वनं पर्वतश्च बहुलं अथवा बहुलानि।

श्रद्धा वित्तं विधिश्चेति त्रितयं तत्समागतम्। सूर्यः चन्द्रो नक्षत्राणि च भगवता सर्वं सृष्टम्।

5) ಆದರೆ ಒಂದೇ ವಾಕ್ಯದಲ್ಲಿ ಪುಲ್ಲಿಂಗ ಮತ್ತು ಸ್ತ್ರೀಲಿಂಗ ಶಬ್ದಗಳು ಇದ್ದರೆ ವಿಶೇಷಣವು ಪುಲ್ಲಿಂಗದಲ್ಲಿರುತ್ತದೆ.

राधा कृष्णश्च मे अनुकूलौ। वातो वृष्टिश्चानुकूलौ यथा मे। तस्य पुत्रः पुत्री च जातौ। राजा राज्ञी च उभावपि उदारचरितौ।

ಗಮನಿಸಿರಿ : यत् करोषि यदश्नाति यद्ददासि जुहोषि यत्।
यत् तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥

ಲಿಂಗಗಳನ್ನು ಗಮನಿಸಿರಿ. तस्मिन् सत्यं धृतिर्ज्ञानं तपः शौचं दमः शमः।
ध्रुवाणि पुरुषव्याघ्र लोकपालसमे नृपे॥

शरणं तरुणेन्द्रशेखरः शरणं मे गिरिराजकन्यका।
शरणं पुनरेवतावुभौ शरणं नान्यदुपैमि दैवतम्॥

ದ್ವಿವಚನವನ್ನು ಗುರುತಿಸಿರಿ. तरुणौ रुपसंपन्नौ सुकुमारौ महाबलौ।
पुण्डरीक विशालाक्षौ चीरकृष्णाजिनाम्बरौ॥

फलमूलाशिनौ दान्तौ तापसौ ब्रह्मचारिणौ।
पुत्रौ दशरथस्येतौ भ्रातरौ रामलक्ष्मणौ॥

शरण्यौ सर्वसत्त्वानां श्रेष्ठौ सर्वधनुष्मताम्
रक्षःकुलनिहन्तारौ त्रायेतां नो रघूत्तमौ॥

ब्रह्मामुरारिस्त्रिपुरान्तकारी भानुः शशीभूमि सुतो बुधश्च।
गुरुश्च शुक्रः शनिराहुकेतू कुर्वन्तु सर्वे मम सुप्रभातम्॥



# ಅಧ್ಯಾಯ ೪

## ಅಮರಕೋಶಸಂಗ್ರಹ

**यस्य ज्ञान-दया-सिन्धोरगाधस्यानघागुणाः।**

**सेव्यतामक्षयो धीराः सश्रियै चामृताय च ॥**

**प्रथम-काण्डः**

**स्वर्गवर्गः** - स्वरव्ययं **स्वर्ग**-नाक-त्रिदिव-त्रिदशालयाः। अमरा-निर्जरा-देवास्त्रिदशा विबुधाः **सुराः**॥ 1॥ असुरादैत्य-दैतेय-दनुजेन्द्रारि-**दानवाः**। सर्वज्ञः सुगतो **बुद्धो** धर्मराजस्तथागतः॥ 2॥ **हिरण्यगर्भो** लोकेशः स्वयंभू-श्चतुराननः। दामोदरो हृषीकेशः **केशवो** माधवःस्वभूः॥ 3॥ **मदनो** मन्मथो मारः प्रद्युम्नो मीनकेतनः। **लक्ष्मीः** पद्मालया पद्मा कमला श्रीर्हरिप्रिया॥ 4॥ गरुत्मान् **गरुडस्ताक्ष्यो** वैनतेयः खगेश्वरः। **ईश्वरः** शर्व ईशानः शंकर-श्चन्द्रशेखरः॥5॥ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा।वाराही च तथेन्द्राणी चामुण्डा **सप्तमातरः**॥ 6॥ अणिमा महिमा चैव गरिमा लघिमा तथा। प्राप्तिः प्राकाम्यमीशित्वं वशित्वं **चाष्टसिद्धयः**॥ 7॥ **उमा** कात्यायनी गौरी काली हैमवती-श्वरी। **विनायको** विघ्नराज-द्वैमातुर-गणाधिपाः॥8॥ **कार्तिकियो** महासेनः शरजन्मा षडाननः। **इन्द्रो** मरुत्वान् मघवा बिडौजाः पाकशासनः॥9॥ **ह्रादिनी** वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः। स्यात्**सुधर्मा** देवसभा पीयूषममृतं **सुधा**॥10॥ पञ्चैते **देवतरवो** मन्दारः पारिजातकः। सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्॥ 11॥ घृताची मेनका रम्भा उर्वशी च तिलोत्तमा। सुकेशी मञ्जुघोषाद्याः कथ्यन्तेऽप्सरसो बुधैः॥ 12॥ **अग्निर्वैश्वानरोवन्हिर्वीतिहोत्रो** धनंजयः। **धर्मराजः** पितृपतिः समवर्ती परेतराट्॥ 13॥ **राक्षसः** कौणपः क्रव्यात् क्रव्यादोऽसृप आशरः। श्वसनः स्पर्शनो **वायु**र्मातरिश्वा सदागतिः॥14॥ प्राणोऽपानः समानश्चोदानव्यानौ च **वायवः**। हृदि प्राणो गुदेऽपानः **समानो** नाभिमण्डले॥ 15॥ **उदानः** कण्ठदेशे स्याद्व्यानःसर्वशरीरगः। **सत्वरं** चपलं तूर्णं लघुक्षिप्रमरंद्रुतम्॥ 16॥ **जवो** वेगस्तथारंहस्तरसी तु **रयः** स्यदः।

---

ವಿ.ಸೂ. ಪ್ರತಿಯೊಂದು ಸಾಲಿನಲ್ಲಿಯ ದಪ್ಪ ಅಕ್ಷರಗಳ ಶಬ್ದಗಳು ತಮ್ಮ ಪರ್ಯಾಯ ಪದಗಳನ್ನು ಸೂಚಿಸುತ್ತವೆ.

सततानारताःश्रान्त-सन्तताविरतानिशम् ॥ 17 ॥ तीव्रैकान्तनितान्तानि गाढ-बाढ-दृढानि च। मनुष्यधर्मा धनदो राजराजो धनाधिपः ॥ 18 ॥ नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम्।

**दिग्वर्गः** - दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः ॥ 19 ॥ इन्द्रो वन्हिः पितृपतिर्नैऋतो वरुणो मरुत्। कुबेर ईशः पतयः पूर्वीदीनां दिशां क्रमात्। धाराधरो जलधरस्तडित्वान् वारिदोऽम्बुभृत् ॥ 20 ॥ तडित्सौदामनी विद्युच्चञ्चला चपला अपि। अपिधान तिरोधान पिधानाच्छादनानि च ॥ 21 ॥ हिमांशु- श्चन्द्रामाश्चन्द्र इन्दुः कुमुदबान्धवः। भित्तं शकलखण्डेवा पुंस्यर्धोऽर्धं समेंऽशके। ।22 ॥ चन्द्रिका कौमुदी ज्योत्स्ना प्रसादस्तु प्रसन्नता। कलंकांकौ लाञ्छनं च चिन्हं लक्ष्म च लक्षणम् ॥ 23 ॥ सुषमा परमाशोभा शोभाकान्तिर्द्युतिच्छविः। अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् ॥ 24 ॥ नक्षत्रमृक्षं भं तारा तारकाप्युडुवा स्त्रियाम्। बृहस्पतिस्सुराचार्यो गीष्पतिर्धिषणो गुरुः ॥25 ॥ शुक्रो दैत्यगुरुःकाव्य उशना भार्गवः कविः। अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः ॥26 ॥ सूर सूर्यार्यमादित्य -द्वादशात्म-दिवाकराः। किरणोस्र-मयूखांशु-गभस्ति-घृणि-रश्मयः ॥ 27 ॥ भानुः करो मरीचिः स्त्री पुंसयोर्दीधितिः स्त्रियाम् । स्युः प्रभारुग्रुचिस्त्विड् भा भाश्तविद्युतदीप्तयः ॥ 28 ॥ कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति।

**कालवर्गः** - कालो दिष्टोऽप्यनेहापि समयोऽप्यथ पक्षतिः ॥ 29 ॥ घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ। प्रत्यूषोऽहर्मुखं कल्यमुषप्रत्युषसी अपि ॥ 30 ॥ प्रभातं च दिनान्ते तु सायं संध्या पितृप्रसूः। निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा ॥ 31 ॥ विभावरीतमस्विन्यौ रजनी यामिनी तमी। वसन्ते पुष्पसमयःसुरभिर्ग्रीष्म ऊष्मकः ॥ 32 ॥ संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः। संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि ॥ 33 ॥ अस्त्री पङ्कं पुमान् पाप्मा पापं किल्बिषकल्मषम्। मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसंमदाः ॥ 34 ॥ श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्। भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम् ॥ 35 ॥ दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः। जनुर्जनन जन्मानी जनिरुत्पत्तिरुद्भवः ॥ 36 ॥ चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः।

**धीवर्गः** - बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः ॥ 37 ॥ अङ्गीकाराभ्युपगम-प्रतिश्रव-समाधयः। मुक्तिः कैवल्यनिर्वाण-श्रेयो-निःश्रेयसामृतम् ॥ 38 ॥ रूपं शब्दो

गन्धरसस्पर्शाश्च **विषया** अमी। तुवरस्तु **कषायोऽस्त्री** मधुरो लवणः कटुः ॥ 39 ॥ तिक्तोम्लश्च **रसाः** पुंसि तद्वत्सु षडमी त्रिषु। शुक्ल-शुभ्र-शुचि- श्वेत-विशद-श्वेत-पाण्डराः ॥ **40** ॥ **कृष्णे** नीलासित-श्याम-काल-श्यामल-मेचकाः ॥

**शब्दादि वर्गः** - ब्राह्मी तु भारती **भाषा** गीर्वाग्वाणी सरस्वती ॥ 41 ॥ वार्ता प्रवृत्तिर्वृत्तान्त उतन्तः स्यादथाह्वयः। आख्याह्वे अभिधानं च नामधेयं य नाम च ॥ 42 ॥ अभिशापः प्रमादस्तु शब्दः स्यादनुरागजः। यशः कीर्तिः समज्ञा च स्तवः स्तोत्रं स्तुतिर्नुतिः। ॥ 43 ॥ उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे। शब्दे निनाद-निनद-ध्वनि-ध्वान-रव-स्वनाः ॥ 44 ॥

**नाट्यवर्गः** - ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने। शृङ्गार-वीर-करुणाद्भुत-हास्य-भयानकाः ॥ 45 ॥ बीभत्सरौद्रौ च रसाः श्रृङ्गारः शुचिरुज्वलः। विस्मयोऽद्भुतमाश्चर्यं चित्रमप्यथ भैरवम् ॥ 46 ॥ अनादरः परिभवः परीभावस्तिरस्क्रिया। मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्ञा साऽपत्रपाऽन्यतः ॥ 47 ॥ कोप-क्रोधामर्ष-रोष-प्रतिघा रुट्क्रुधौ स्त्रियौ। इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः। ॥ 48 ॥ कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे। कौतूहलं कौतुकं च कुतुकं च कुतूहलम् ॥ 49 ॥ स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि।

**पातालभोगिवर्गः** - छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा शुषिः ॥ 50 ॥ अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः। सर्पः पृदाकुर्भुजगो भुजंगोऽहिर्भुजंगमः ॥ 51 ॥ स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्। पीडा बाधा व्यथा दुःखमामनस्यं प्रसूतिजम् ॥ 52 ॥

**वारिवर्गः** - समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः। आपः स्त्री भूम्नि वार्वारि सलिलं कमलं **जलम्** ॥ 53 ॥ कूलं रोधश्च **तीरं** च प्रतीरं च तटं त्रिषु। नाव्यं त्रिलिङ्गं नौतार्ये स्त्रियां नौस्तरणिस्**तरिः** ॥ 54 ॥ पृथुरोमा झषो **मत्स्यो** मीनो वैसारिणोऽण्डजः। स्यात्**कुलीरः** कर्कटकः **कूर्मे** कमठकच्छपौ ॥ 55 ॥ भेके मण्डूक-वर्षाभूशालूर-प्लवदर्दुराः। पद्माकरस्तडागोऽस्त्री कासारः सरसी **सरः**। ॥ 56 ॥ **तरङ्गिणी** शैवलिनी तटिनी ह्रादिनी धुनी। **गङ्गा** विष्णुपदी जह्नुतनया सुरनिम्नगा ॥ 57 ॥ वा पुंसि **पद्मं** नलिनमरविन्दं महोत्पलम्। पङ्केरुहं तामरसं सारसं **सरसीरुहम्** ॥ 58 ॥

## द्वितीयकाण्डः

**भूमिः पुरवर्गः च** - धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी **क्षितिः**। मृण्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका॥ 59॥ अयनं वर्त्म **मार्गाध्वपन्थानः पदवी** सृतिः। पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम्॥ 60॥ **गृहं** गेहोदवसितं वेश्म सद्म निकेतनम्। गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः॥ 61॥ **शुद्धान्तश्चावरोधश्च** स्यादट्टः क्षौममस्त्रियाम्। संमार्जनी **शोधनी** स्यात् **संकरो**ऽवकरस्तथा॥ 62॥

**शैलवर्गः** - अद्रि-गोत्र-गिरि-ग्रावाचल-**शैल**-शिलोच्चयः। गन्धमादनमन्ये य हेमकूटादयो **नगाः**॥63॥ **वनौषधिवर्गः** - अटव्यरण्यं विपिनं गहनं काननं **वनम्**। आरामः स्यादुपवनं कृत्रिमं वनमेव यत॥ 64॥ वीथ्यालिरावलिः **पङ्क्तिः** श्रेणी लेखास्तु राजयः। **वृक्षो** महीरूहः शाखी विटपी पादपस्तरुः॥65॥ **प्रफुल्लोत्फुल्ल**-संफुल्ल-व्याकोचविकचस्फुटाः। **लता** प्रतानिनी वीरुद्गुल्मिन्युलप इत्यपि॥ 66॥ **काष्ठं** दार्विन्धनं त्वेध इध्ममेधः समित्स्त्रियाम्। **पत्रं** पलाशं छदनं दलं पर्णं छदः पुमान्॥ 67॥ क्षारको **जालकं** क्लीबे **कलिका** कोरकः पुमान्। स्त्रियः सुमनसः **पुष्पं** प्रसूनं कुसुमं सुमम्॥ 68॥ स्युर्जम्बीरे दन्तशठ-जम्भ**जम्भीर**-जम्भलाः। द्वौ परिव्याधविदुलौ **नादेयी** चाम्बुवेतसे॥69॥ **आम्रश्चूतो** रसालोऽसौ सहकारोऽतिसौरभः। **चाम्पेयः** केसरो नागकेसरः काञ्चनाह्वयः ॥ 70॥ **कदली** वारणबुसा रम्भा मोचांशुमत्फला। तृणराजाह्वयस्तालो **नालिकेर**स्तु लाङ्गली॥ 71॥ घोण्टा तु पूगः क्रमुको गुवाकः खपुरोऽस्य तु।

**सिंहादि वर्गः** - **सिंहो** मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः॥ 72॥ **पुण्डरीकः** पञ्चनखश्चित्रकाय-मृगद्विषः। शार्दूलद्वीपिनौ **व्याघ्रे तरक्षुस्तु** मृगादनः॥ 73॥ **मयूरो**-बर्हिणो-बर्ही नीलकण्ठो-भुजङ्गभुक्। **कपिप्लवंग**-प्लवग-शाखामृग-वलीमुखाः॥ 74॥ **श्रृगाल**-वञ्चुकक्रोष्टु-फेरुफेरव-जम्बुकाः। ओतुर्बिडालो **मार्जारो** वृषदंशक आखुभुक्॥ 75॥ **मृगे** कुरङ्ग-वातायु-हरिणाजिनयोनयः। उन्दुरुर्**मूषको**ऽप्याखुर्गिरिका बालमूषिका॥ 76॥ **वृश्चिकः** शूककीटः स्यादलिद्रोणौ तु वृश्चिके। पारावतः कलरवः **कपोतो**ऽथ च **कुक्कुटः**॥ 77॥ वनप्रियः परभृतः **कोकिलः** पिक इत्यपि। **काके** तु करटारिष्ट-बलिपुष्ट-सकृत्प्रजाः॥ 78॥ **हंसास्तु** श्वेतगरुतश्चक्राङ्गा मानसौकसः। मधुव्रतो **मधुकरो** मधुलिण्मधुपालिनः ॥ 79॥

द्विरेफ-पुष्पालिड्-भृङ्ग-षट्पद-**भ्रमरा**लयः।**खगे** विहंग-विहग-विहंगमविहायसः ।।
0 ।। शकुन्ति-**पक्षि**-शकुनि-शकुन्त-शकुन-द्विजाः। पेशी कोषो द्विहीनेऽण्डं कुलायो
नीडमस्त्रियाम् ।। 81 ।। पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः **शिशुः**।स्त्रीपुंसौ
मिथुनं **द्वंन्द्वं** युग्मं तु युगलं युगम् ।। 82 ।। **समूहो** निवह-व्यूह-सन्दोह-विसर-
जाः। पशूनां समजोऽन्येषां **समाजो**ऽथ सधर्मिणाम् ।। 83 ।। स्यान्निकायः पुञ्जराशी
त्करः कूटमस्त्रियाम्।

मनुष्यवर्गः **मनुष्या** मानुषा मर्त्या मनुजा मानवा नराः ।। 84 ।। स्त्री योषिदबला
षा **नारी** सीमन्तिनी वधूः। विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना ।। 85 ।।
मदा मानिनी कान्ता **ललना** च नितम्बिनी। **भार्या** जायाऽथ पुंभूम्नि दाराः
यात्तु कुटुम्बिनी। ।86 ।। पुरंध्री सुचरित्रा तु **सती** साध्वी पतिव्रता। आत्मजस्तनयः
नुः सुतः पुत्रः स्त्रियां त्वमी ।। 87 ।। जनयित्री **प्रसूर्माता** जननी **भगिनी**
वसा। प्रजावती **भ्रातृजाया** मातुलानी तु **मातुली** ।। 88 ।। पतिपत्न्योः प्रसूः
श्वश्रूः श्वशुरस्तु पिता तयोः। पितुर्भ्राता **पितृव्यः** स्यान्मातुर्भ्राता तु **मातुलः** ।।
9 ।। **श्यालाः** स्युर्भ्रातरः पत्न्याः स्वामिनो **देवृदेवरौ**। **स्वस्त्रीयो** भागिनेयः
याज्ञा**माता** दुहितुः पतिः ।। 90 ।। **पितामहः** पितृपिता तत्पिता **प्रपितामहः** ।
गोत्र-**बान्धव**-ज्ञाति-बन्धु-स्व-स्वजनाः समाः। धवः प्रियः **पतिर्भर्ता**
ारस्तूपपतिः समौ। मातापितरौ **पितरौ** मातरपितरौ प्रसूजनयितारौ। ।। 92 ।।
श्वश्रूः श्वशुरः **श्वशुरौ पुत्रौ** पुत्रश्च दुहिता च। **दंपती** जंपती जायापती
र्यापती च तौ ।। 93 ।। तृतीयाप्रकृतिः **षण्ढः** क्लीबः पण्डो नपुंसके ।। शिशुत्वं
शवं **बाल्यं** तारुण्यं यौवनं समे ।। 94 ।। प्रवयाः स्थविरो **वृद्धो** जीनो जीर्णो
रन्नपि । स्त्रीरुग्रुजा चोपताप-**रोग**-व्याधि-गदामयाः ।। 95 ।। भेषजौषध-
भज्यान्यगदो जायुरित्यपि। रोगहार्यगदंकारो भिषग्**वैद्यौ** चिकित्सके ।। 96 ।।
र्तो **निरामयः** कल्य उल्लाघो नीर्गतो गदात्। उत्तप्तं **शुष्कमांसं** स्यात् **पललं**
व्यमामिषम् ।। 97 ।। **गात्रं** वपुः संहननं शरीरं वर्ष्म विग्रहः। कायो **देहः**
लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः ।। 98 ।। पुनर्भवः कररुहो **नखो**ऽस्त्री
वरोऽस्त्रियाम्। **कण्ठो** गलोऽथ ग्रीवायां शिरोधिः कंधरेत्यपि ।। 99 ।। वक्त्रास्ये
दनं तुण्डमाननं लपनं मुखम्। क्लीबे घ्राणं गन्धवहा घोणा नासा च **नासिका** ।।
0 ।। **ओष्ठाधरौ** तु रदनच्छदौ दशनवाससी। अधस्ताच्चिबुकं गण्डौ **कपोलौ**

तत्परा हनुः ।। 101 ।। रदना दशना **दन्ता** रदास्तालु तु काकुदम् । रसज्ञा रसना **जिह्वा** तारकाक्ष्णः **कनीनिका ।। 102 ।।** लोचनं **नयनं** नेत्रमीक्षणं चक्षुरक्षिणी। कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री **श्रवणं** श्रवः ।। 103 ।। उत्तमाङ्गं **शिरः** शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम् । चिकुरः कुन्तलो वालः कचः **केशः** शिरोरुहः । । 104 ।। आकल्पवेषौ **नेपथ्यं** प्रतिकर्म **प्रसाधनम् ।** प्रसाधितो**ऽलंकृत**श्च भूषितश्च परिष्कृतः ।। 105 ।। अलंकारस्त्वाभरणं परिष्कारो **विभूषणम् । पटच्चरं** जीर्णवस्त्रं समौ नक्तककर्पटौ ।। 106 ।। **वस्त्र**माच्छादनं वासश्चैलं वसनमंशुकम्। प्रतिसीराज**वनिका** स्यात् तिरस्करिणी च सा ।। 107 ।। काश्मीरजन्माग्निशिखं वरं बाल्हीकपीतने । **लाक्षा** राक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः ।। 108 ।। **घनसारश्चन्द्रसंज्ञः** सिताभ्रो हिमवालुका । गन्धसारो मलयजो भद्रश्रीश्**चन्दनो**ऽस्त्रियाम् ।। 109 ।। **उपधानं** तूपबर्हः **शय्यायां** शयनीयवत् । शयनं मञ्चपर्य**ङ्क**-पल्यकाः खट्वया समाः ।। 110 । गेन्दुकः **कन्दुको** दीपः प्रदीपः पीठमासनम् । **दर्पणे** मुकुरादर्शौ **व्यजनं** तालवृन्तकम् ।। 111 ।।

**ब्रह्मवर्गः** - **सन्तति**र्गोत्र-जनन-कुलान्यभिजनान्वयौ । महाकुल-कुलीनार्य-सभ्य-सज्जन-साधवः ।। 112 ।। **विद्वान्** विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः । धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः ।। 113 ।। पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः । एते **पञ्चमहायज्ञा** ब्रह्मयज्ञादिनामकाः ।। 114 ।। **सभासदः** सभास्ताराः सभ्याः सामाजिकाश्च ते । विश्राणनं **वितरणं** स्पर्शनं प्रतिपादनम् । 115 ।। **पूजा** नमस्याऽपचितिः सपर्यार्चार्हणाः समाः । वरिवस्या तु **शुश्रूषा** परिचर्याप्युपासना ।। 116 ।। समे तु पादग्रहण**मभिवादन**मित्युभे । **यज्ञः** सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः ।। 117 ।। अजिनं **चर्म** कृत्तिः स्त्री भैक्षं भिक्षाकदम्बकम् । **क्षौरं** तु भद्राकरणं मुण्डनं वपनं त्रिषु ।। 118 ।।

**क्षत्रियवर्गः** - मूर्धाभिषिक्तो राजन्यो बाहुजः **क्षत्रियो** विराट् । **राजा** राट् पार्थिव-क्ष्माभृन्नृपभूप-महीक्षितः ।। 119 ।। **मन्त्री** धीसचिवोऽमात्योऽन्ये कर्मसचिवास्ततः । प्रतीहारो **द्वारपाल**-द्वास्थ-द्वास्थित-दर्शकाः ।। 120 ।। रिपौ **वैरि**-सपत्नारि-द्विषद्द्वेषण-दुर्हृदः । **वयस्यः** स्निग्धः संवयाथ **मित्रं** सखा सुहृत् ।। 121 ।। तान्त्रिको ज्ञातसिद्धान्तः सत्री **गृहपतिः** समौ । **लिपिकारो**ऽक्षरचणोऽक्षरचुञ्चुश्च लेखके । 122 ।। अध्वनीनोऽध्वगोध्वन्यः पान्थः **पथिक** इत्यपि । विविक्त**विजन**-च्छन्न-

निःशलाकास्तथा रहः ।। 123 ।। आगोऽ**पराधो** मन्तुश्च समे तूद्दानब**न्धने** । दन्ती दन्तावलो **हस्ती** द्विरदोऽनेकपो द्विपः ।। 124 ।। मतङ्गजो **गजो** नागः कुञ्जरो वारणः करी । घोटके वीतितुरग-तुरंगा**श्व**-तुरंगमाः ।। 125 ।। **वाजि**-वाहार्वगन्धर्व-हय-सैन्धव-सप्तयः । **पदाति**पत्ति-पदग-पादातिक-पदातयः ।। 126 ।।

**पुरोगमः** पुरोगामी मन्दगामी तु **मन्थरः** । तरस्वी त्वरितो **वेगी** प्रजवी जवनो जवः ।। 127 ।। वरूथिनी बलं **सैन्यं** चक्रं चानीकमस्त्रियाम् । **संपत्तिः** श्रीश्च लक्ष्मीश्च विपत्त्यां विपदापदौ ।। 128 ।। **धनुश्चा**पौ धन्वशरासन-कोदण्ड-कार्मुकम् । पृषत्क-**बाण**-विशिखा अजिह्मगखगाशुगाः ।। 129 ।। रेणुर्द्वयोः स्त्रियां **धूलिः** पांसुर्ना न द्वयो रजः । **पताका** वैजयन्ती स्यात् केतनं ध्वजमस्त्रियाम् ।। 130 ।। **युद्ध**मायोधनं जन्यं प्रधनं प्रविदारणम् । प्रमापणं **निबर्हणं** निकारणं विशारणम् ।। 131 ।। प्रवासनं परासनं निषूदनं **निहिंसनम्** । निस्तर्हणं **निहननं** क्षणनं परिवर्जनम् ।। 132 ।। अन्तो **नाशो** द्वयोमृत्युर्मरणं निधनोऽस्त्रियाम् । पुंसि भूम्न्य**सवः प्राणा**श्चैवं जीवोऽसुधारणम् ।। 133 ।।

**वैश्यवर्गः** - ऊरव्या ऊरुजा अर्या **वैश्या** भूमिस्पृशो विशः । क्षेत्राजीवः कर्षकश्च कृषिकश्च **कषीवलः** । प्राजनं तोदनं **तोत्रं** खनित्रमवदारणे ।। 134 ।। आरालिका आन्धसिकाः **सूदा** औदनिका गुणाः । आपूपिकः कान्दविको **भक्ष्यकार** इमे त्रिषु ।। 135 ।। **घृत**माज्यं हविः सर्पिः दुग्धं **क्षीरं** पयःसमम् । जेमनं लेह **आहारो** निघसो न्याद इत्यपि ।। 136 ।। कामं प्रकामं **पर्याप्तं** निकामेष्टं यथेप्सितम् । वैदेहकः सार्थवाहो नैगमो **वाणिजो** वणिक् ।। 137 ।। **विक्रेयं** पणितव्यं च पण्यं क्रेयं प्रसारितम् । द्रव्यं वित्तं स्वापतेयं रिक्थमर्थं **धनं** वसु ।। 138 ।। स्वर्णं **सुवर्णं** कनकं हिरण्यं हेम काञ्चनम् । दुर्वर्णं **रजतं** रूप्यं खर्जूरं श्वेतमित्यपि ।। 139 ।।

**अन्तिमवर्गः**-**कुम्भकारः** कुलालः स्यात् **मालाकार**स्तु मालिकः । भृत्ये-दासेर-दासेय-**दास**-गोप्यक-चेटकाः ।। 140 ।। **व्याधः** किरातः शबरः पुलिन्दो लुब्धकोऽपि सः । **शुनकः** स्यात्सारमेयः कुक्कुरः सरमा शुनी ।। 141 ।। चौरैकागारिकस्तेन-दस्यु-**तस्कर**-मोषकाः । पिटकः पेटकः**पेटा** मञ्जूषा पेटिकास्थितम् ।। 142 ।। प्रतिमानं प्रतिच्छाया प्रतिमा**प्रतिबिम्बकम्** । साधारणं समानश्च सदृक्षः **सदृशः** सदृक् ।। 143 ।। निभ-संकाश-नीकाश-प्रतीकाशोप**मादयः** । स्युरुत्तरपदे भूतरूप-कल्पादयश्च ते ।। 144 ।। भरण्यं

भरणं मूल्यं भृतयो भर्म **वेतनम्**। सुरा-कादम्बरी हाला प्रसन्ना **मदिरा** त्विरा ।। 145 ।। **द्यूतो**ऽस्त्रियामक्षवती कैतवं पण इत्यपि।

## तृतीय काण्डः

**विशेषणवर्गः** - सुकृतीपुण्यवान् **धन्यो** महेच्छस्तु महाशयः ।। 146 ।। **प्रवीणे** निपुणाभिज्ञ-विज्ञ-निष्णात-शिक्षिताः। दुर्मना **विमना** अन्तर्मनाः स्यादुत्क उन्मनाः ।। 147 ।। प्रतीतो प्रथितः ख्यात-वित्त-विज्ञान-**विश्रुताः**। **अधिभूर्नायको** नेता प्रभुः परिवृढोऽधिपः। । 148 ।। लक्ष्मीवान् लक्षणः श्रीलः **श्रीमान्** स्निग्धस्तु वत्सलः। इभ्य आढ्यो धनी **स्वामी** त्वीश्वरः पतिरीशिता ।। 149 ।। स्याद्दयालुः **कारुणिकः** कृपालुः सूरतः समाः। स्वतन्त्रोऽपावृत्तः स्वैरी **स्वच्छन्दो** निरवग्रहः ।। 150 ।। **परतन्त्रः** पराधीनः परवान्नाथवानपि। **बुभुक्षितः** स्यात् क्षुधितो जिघत्सुरशनायितः ।। 151 ।। **लुब्धो**ऽभिलाषकस्तृष्णक्समौ लोलुपलोलुभौ । वश्यः प्रणेयो निभृत-**विनीत**-प्रश्रिताः समाः ।। 152 ।। अधीरे कातरस्त्रस्त-**भीरु**-भीलुक-भीरुकाः। शरारुर्घातुको हिंस्रः सान्द्रः**स्निग्धस्तु** मेदुरः ।। 153 ।। सहिष्णुः **सहनः** क्षान्ता तितिक्षुः क्षमिता क्षमी। क्रोधनोऽमर्षणः **कोपी** चण्डस्त्वत्यन्त कोपनः ।। 154 ।। प्रत्यादिष्टो निरस्तःस्यात् प्रत्यासन्नो **निराकृतः**। **मनोहतः** प्रतिहतः प्रतिबद्धो हतश्च सः ।। 155 ।। नृशंसो घातुकः **क्रूरः** पिशुनो **दुर्जनः** खलः। अज्ञे **मूढ**-यथाजात-मूर्ख-वैधेय-बालिशाः ।। 156 ।। कदर्ये **कृपण**-क्षुद्र-किंपचानमितंपचाः। निस्वस्तु दुर्विधो दीनो **दरिद्रो** दुर्गतोऽपि सः ।। 157 ।।

वनीयको **याचनको** मार्गणौ याचकार्थिनौ। **सुन्दरं** रुचिरं चारु सुषमं साधु शोभनम् ।। 158 ।। कान्तं मनोरमं रुच्यं **मनोज्ञं** मञ्जु मञ्जुलम्। अभीष्टेऽभीप्सितं हृद्यं दयितं **वल्लभं** प्रियम् ।। 159 ।। कुपूय-**कुत्सितावद्य**-खेटगर्ह्याणकास्समाः। मलीमसं तु **मलिनं** कच्चरं मलदूषितम् ।। 160 ।। पूतं **पवित्रं** मेध्यं तु वीध्रं तु विमलार्थकम्। **मुख्यवर्य**-वरेण्याश्च प्रवर्होऽनवराध्र्यवत् ।। 161 ।। **श्रेयान्** श्रेष्ठः पुष्कलःस्यात् सत्तमश्चातिशोभने। स्युरुत्तरपदे व्याघ्र-पुंगवर्षभ-कुञ्जराः ।। 162 ।। सिंह-शार्दूर-नागाद्याः **पुंसि श्रेष्ठार्थ**गोचराः। विशंकटं-पृथु-बृहत्-विशालं-पृथुलं-**महत्** ।। **163** ।। स्तोकाल्प-क्षुल्लकाः**सूक्ष्मं** श्लक्ष्णं-दभ्रं कृशं तनु। स्त्रियां **मात्रा** त्रुटी पुंसि लवलेशकणाणवः ।। 164 ।। प्रभूतं **प्रचुरं** प्राज्यमदभ्रं बहुलं बहु। अशेषं निखिलं कृत्स्नं समस्तमखिलं तथा ।। 165 ।। **समग्रं** सकलं पूर्णमखण्डं

स्यादनूनकम्। घने **निरन्तरं** सान्द्रं पेलवं **विरलं** तनु।। 166।। **समीपे** निकटासन्न-सन्निकृष्ट-सनीडवत्। सदेशाभ्याश-सविधोपकण्ठास्तथान्तिके।। 167।। दवीयश्च दविष्ठं च **सुदूरं दीर्घ**मायतम्। **उच्च**-प्रांशून्नतोदग्रोच्छ्रितास्तुङ्गेऽथ **वामने** ।। 168।। न्यङ्-नीच-खर्व-ह्रस्वाःस्युरवाग्रेऽवनतानते। अरालं-वृजिनं-जिम्हं-**कुटिलं** वक्रमित्यपि। ।169।। **शाश्वत**स्तु ध्रुवोनित्य-सदातन-सनातनाः। **चंचलं**-तरलं कंप्रं चलं लोलं परिप्लवे।। 170।। **कर्कशं** कठिनं क्रूरं कठोरं निष्ठुरं दृढम्। पुराणे प्रतन-प्रत्न-**पुरातन**-चिरन्तनाः।। 172।। प्रत्यग्रोऽभिनवो नव्यो नवीनो **नूतनो** नवः। **अन्तो** जघन्यं चरममन्त्य-पाश्चात्य-पश्चिमाः।। 173।। वेल्लितं-प्रेङ्खिताधूत-चलिता **कम्पिता** धुते। **वेष्टितं** स्याद्वलयितं संवीतं रुद्धमावृतम्।।। 174।। **प्राप्यं** गम्यं समासाद्यं स्यन्नं रीणं **स्रुतं** स्नुतम्। **हृष्टे** मतस्तृप्तः प्रल्हन्नः प्रमुदितः प्रीतः।। 175।। **छिन्नं** छातं लूनं कृत्तं दातं दितं छितं वृक्णम्। स्रस्तं **ध्वस्तं** भ्रष्टं स्कन्नं पन्नं च्युतं गलितम्।। 176।। **लब्धं** प्राप्तं विन्नं भावितमासादितं च भूतं च। **अन्वेषितं** गवेषितमन्विष्टं मार्गितं मृगितम्।। 177।। **आर्द्रं** सांर्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तं च। **त्रातं** त्राणं रक्षितमवितं गोपायितं च गुप्तं च।। 178।। अवगणितमवमतावज्ञातेऽ**वमानितं** च परिभूते। ऊरीकृतमुररीकृत-मङ्गीकृतमाश्रुतं **प्रतिज्ञातम्**।। 179।। **ईलित**शस्त-पणायित-पनायित-प्रणुत-पणित-पनितानि। **भक्षित**-चर्वित-लीढ-प्रत्यवसित-गिलित-खादित-प्सातम्।। 180।। अभ्यवहृतान्न-जग्ध-ग्रस्त-ग्लस्ताशितं **भुक्ते**। क्षेपिष्ठ-क्षोदिष्ठ-प्रेष्ठ-वरिष्ठ-स्थविष्ठ-बंहिष्ठाः।। 181।। क्षिप्र-क्षुद्राभीप्सित-पृथु-पीवर-बहुल-प्रकर्षार्थाः।

**संकीर्णवर्गः** - परिणामो **विकारो** द्वे समे विकृतिविक्रिये।। 182।। वियामो वियमो यामो यमः संयाम**संयमौ**। **विघ्नो**ऽन्तरायः प्रत्यूहः स्यादुपघ्नोऽन्तिकाश्रये।। 183।। **संवीक्षणं** विचयनं मार्गणं मृगणा मृगः। **परिरम्भः** परिष्वङ्गः संश्लेष उपगूहनम्।। 184।। निर्वर्णनं तु निध्यानं **दर्शना**लोकनेक्षणम्। प्रत्याख्यनं निरसनं प्रत्यादेशो **निराकृतिः** ।। 185।।

**नानार्थवर्गः** - **आकाशे** त्रिदिवे **नाको लोकस्तु** भुवने जने। **पद्ये** यशसि च श्लोकः शरे खड्गे च सायकः।। 186।। **योगः** संनहनोपाय-ध्यान-संगति-युक्तिषु। स्वर्गेषु-पशु-वाग्वज्र-दिङ्नेत्र-घृणिभू-जले।। 187।। लक्ष्य-दृष्ट्यास्त्रियां पुंसि **गौर्लिङ्गं** चिन्ह-शेफसोः। **भगं** श्रीकाम-माहात्म्य-वीर्ययत्नार्ककीर्तिषु।। 188।। **अजा** विष्णुहरच्छागा गोष्ठाध्वनिवहा **व्रजाः**। **रिष्टं**

क्षेमाशुभाभावेष्वरिष्टं तु शुभाशुभे ॥ 189 ॥ मायानिश्चल-यन्त्रेषु कैतवानृत-राशिषु । अयोघने शैलशृङ्गे सीराङ्गे **कूटमस्त्रियाम्** ॥ 190 ॥ **काण्डोऽ**स्त्री दण्ड-बाणार्व-वर्गावसर-वारिषु । **पणो** द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपि च ॥ 191 ॥ मौर्व्यां द्रव्याश्रिते सत्त्वशौर्यसंध्यादिके **गुणः** । निर्यापारस्थितौ कालविशेषोत्सवयोः **क्षणः ॥ 192 ॥** **वर्णो** द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे । **अरुणो** भास्करेऽपि स्याद्वर्णभेदेऽपि च त्रिषु ॥ 193 ॥ **स्थाणुः** शर्वेऽप्यथ **द्रोणः** काकेऽप्याजौ रवे रणः । **हरिणी** स्यान्मृगी हेमप्रतिमा हरिता च या ॥ 194 ॥ **तृष्णे** स्पृहापिपासे द्वे **जुगुप्साकरुणे** घृणे । **शरणं** गृहरक्षित्रोः **श्रीपर्णं** कमलेऽपि च ॥ 195 ॥ **प्रमाणं** हेतुमर्यादा-शास्त्रेयत्ता-प्रमातृषु । **करणं** साधकतमं क्षेत्रगात्रेन्द्रियेऽष्वपि ॥ 196 ॥ **हस्तौ** तु पाणिनक्षत्रे **मरुतौ** पवनामरौ । **आनर्तः** समरे नृत्यस्थाननीवृद्विशेषयोः ॥ 197 ॥ **कृतान्तो** यमसिद्धान्त-दैवाकुशल-कर्मसु । **वार्तं** फल्गुन्यरोगे च त्रिष्वप्सु च **घृतामृते** ॥ 198 ॥ **वृत्तं** पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले । **अर्थोऽ**भिधेय-रैव-स्तु-प्रयोजन-निवृत्तिषु ॥ 199 ॥ निपानागमयोस्**तीर्थ**मृषिजुष्टे जले गुरौ । **पादा** रश्म्यङ्घ्रि-तुर्यांशा-श्चन्द्राग्न्यर्कास्**तमोनुदः ॥ 200 ॥ पदं** व्यवसित-त्राण-स्थान-लक्ष्माङ्घ्रि-वस्तुषु । **आत्मा** यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च ॥ 201 ॥ स्यात्**कौलीनं** लोकवादे युद्धे पश्वहिपक्षिणाम् । **अधिष्ठानं** चक्र-पुर-प्रभावाध्यासनेष्वपि ॥ 202 ॥ **रत्नं** स्वजातिश्रेष्ठेऽपि **वने** सलिलकानने । **धर्माः** पुण्य-यम-न्याय-स्वभावाचार-सोमपाः ॥ 203 ॥ **ललामं** पुच्छ-पुण्ड्राश्वभूषा-प्राधान्य-केतुषु । **प्रत्ययोऽ**धीनशपथ-ज्ञान-विश्वास-हेतुषु ॥ 204 ॥ **समयाः** शपथाचार-काल-सिद्धान्त-संविदः ।

**अव्यय वर्गः** - खेदानुकम्पा-सन्तोष-विस्मयामन्त्रणे **बत** ॥ 205 ॥ **हन्त** हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः । **इति** हेतु प्रकरण प्रकाशादिसमाप्तिषु ॥ 206 ॥ मङ्गलानन्तरारम्भ-प्रश्न-कार्त्स्न्येष्वथो **अथ** । **अलं** भूषण पर्याप्ति-शक्ति-वारण-वाचकम् ॥ 207 ॥ **मुहुः** पुनःपुनःशश्वदभीक्ष्णमसकृत्समाः । **स्राक्**झटित्यञ्जसाह्नाय द्राङ् मंक्षु सपदि द्रुते ॥ 208 ॥ **कदाचिज्ज्ञातु** **सार्धं** तु साकं सत्रासमं सह । आहो उताहो किमुत **विकल्पे** किं किमूत च ॥ 209 ॥ तु हि च स्म ह वै **पादपूरणे** पूजने स्वति । व वा यथा तथैवैवं **साम्येऽ**हो ही च **विस्मये** ॥ 210 ॥ समन्ततस्तु **परितःसर्वतो** विष्वगित्यपि । मृषा **मिथ्या** च वितथे

**यथार्थं** तु यथातथम् ।। 211 ।। **अल्पे** नीचैर्महत्युच्चैः **प्रायो** भूम्न्यद्रुते शनैः । **अस्ति** सत्वे रुषोक्तावु **ऊं** प्रश्नेऽनुनये त्वयि ।। 212 ।। **पुनरार्थे**ऽङ्गनिन्दायां दुष्ठु सुष्ठु प्रशंसने । **सायं** साये प्रगे प्रातः प्रभाते **निकषा**ऽन्तिके ।। 213 ।। **उभयद्युश्चोभयेद्युः** परे त्वह्नि **परेद्यवि** । **ह्यो** गते नागतेऽह्नि **श्वः** परश्वस्तु परेऽहनि ।। 214 ।। तदा तदानीं युगपदेकदा सर्वदा **सदा** । एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा ।। 215 ।।

**लिङ्गादि संग्रह वर्गः** **(स्त्री)** - नामविद्युन्निशा-वल्ली वीणा-दिग्भू-नदी-ह्रियाम् । पुंस्त्वे सभेदानुचराः सपर्यायाः सुरासुराः ।। 216 ।। स्वर्ग-यागाद्रि-मेघाब्धि-द्रुकालासि-शरारयः । करगण्डोष्ठ-दोर्दन्त-कण्ठ-केश-नख-स्तनाः ।। 217 ।। अह्नाहान्ताः क्ष्वेडभेदा रात्रान्ताःप्रागसंख्यकाः । **(न)**द्विहीनेऽन्यच्च खारण्य-पर्णश्वभ्र-हिमोदकम् ।। 218 ।। शीतोष्ण-मांस-रुधिर-मुखाक्षि-द्रविणं बलम् । फलहेम-शुल्ब-लोह सुखदुःख-शुभाशुभम् ।। 219 ।। जलपुष्पाणि लवणं व्यंजनान्यनुलेपनम् । दासीसभं नृपसभं रक्षःसभमिमादिशः ।। 220 ।। **(स्त्री+न)** - षष्ठ्यन्तप्राक्पदाः सेना छाया-शालासुरानिशाः । स्याद्वा नृसेनं श्वनिशं गोशालमितरे च दिक् । **त्रिषु** पात्रीपुटीवाटी पेटीकुवलदाडिमौ ।। 221 ।।



मार्कंडेय महाभाग सप्तकल्पान्त जीवन ।
आयुरारोग्यमैश्वर्यं देहि मे मुनिपुङ्गव ।।

अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः ।
कृपः परशुरामश्च सप्तैते चिरजीविनः ।।
सप्तैतान् संस्मरेन्नित्यं मार्कण्डेयमथाष्टमम् ।
जीवेद् वर्ष शतं साग्रमपमृत्युविवर्जितः ।।

शर्म्यातिं च सुकन्यां च चौवनं चाश्विनौ तथा ।
भोजनान्ते स्मरन् नित्यं चक्षूरोगात् प्रमुच्यते ।।

मार्गेषु मां रक्षतु नीलकण्ठः शैलादि दुर्गेषु वन प्रवासे ।



# ಅ ಧ್ಯಾ ಯ ೫
# ಶ ಬ್ದ ರೂ ಪಾ ವ ಳಿ

ವಿಭಕ್ತಿ ಪ್ರತ್ಯಯಗಳು ಸಂಸ್ಕೃತದ ವೈಶಿಷ್ಟ್ಯವಾಗಿವೆ. ಸಂಸ್ಕೃತ ನಾಮಪದಗಳ ಮೂಲರೂಪಕ್ಕೆ ಪ್ರಾತಿಪದಿಕ ಎನ್ನುತ್ತಾರೆ. (ವಿವರಣೆಗೆ ಪುಟ 76 ನೋಡಿ.) ಇದರಲ್ಲಿ ನಾಮಪದ, ಸರ್ವನಾಮ, ವಿಶೇಷಣ, ಕೃದಂತ, ತದ್ಧಿತ ರೂಪ ಮತ್ತು ಸಮಾಸ ಇವೆಲ್ಲವುಗಳು ಸೇರುತ್ತವೆ. ಇವುಗಳಿಗೆ ವಿಭಕ್ತಿ ಪ್ರತ್ಯಯ ಹಚ್ಚಿದಾಗ ನಮಗೆ ಬೇಕಾದ ರೂಪಗಳು ಸಿಗುತ್ತವೆ. ವಿಭಕ್ತಿಗಳು 8. ವಿಭಕ್ತಿಗಳ ಬಗ್ಗೆ ಮೇಲೆ ಹೇಳಲಾಗಿದೆ. ಅವುಗಳ ಪ್ರತ್ಯಯಗಳು ಹೀಗಿವೆ -

| ವಿಭಕ್ತಿ | | | |
|---|---|---|---|
| प्रथमा | सु (स्=ः) | औ | जस् (अस्=अः) |
| द्वितीया | अम् | औट् (औ) | शस् (अस्=अः) |
| तृतीया | टा (आ) | भ्याम् | भिस् |
| चतुर्थी | ङे (ए) | भ्याम् | भ्यस् |
| पञ्चमी | ङसि (अस्) | भ्याम् | भ्यस् |
| षष्ठी | ङस् (अस्) | ओस् | आम् |
| सप्तमी | ङि (इ) | ओस् | सुप् (सु) |
| संबोधनं | सु | औ | जस् (अस्=अः) |

(ಸಂಬೋಧನವು ಪ್ರಥಮಾದಲ್ಲಿಯೇ ಅಂತರ್ಗತವಾಗುತ್ತದೆ. ಅಂತೆಯೇ ಇದಕ್ಕೆ ಸಂಬೋಧನ ಪ್ರಥಮಾ ಎನ್ನಲಾಗಿದೆ.) ಈ ಪ್ರತ್ಯಯಗಳನ್ನು ಕೂಡಿಸಿದಾಗ ಅನೇಕ ಬದಲಾವಣೆಗಳಾಗುತ್ತವೆ. ಪ್ರತ್ಯಯ ಕೂಡಿಸಿದ ನಾಮಪದಗಳನ್ನು ಸುಬಂತ ಎನ್ನುವರು. सुप् ಎಂಬುದು ಎಲ್ಲ ವಿಭಕ್ತಿ ಪ್ರತ್ಯಯಗಳನ್ನು ಒಳಗೊಂಡ ಸೂತ್ರದ ಪ್ರತ್ಯಾಹಾರ. (स्वौजसमौट् ........ सुप्) ಬೇರೆ ಬೇರೆ ಅಂತವಿರುವ ಶಬ್ದಗಳಿಗೆ ಈ ಪ್ರತ್ಯಯ ಹಚ್ಚಿದಾಗ ಬೇರೆ ಬೇರೆ ಬದಲಾವಣೆಗಳಾಗುತ್ತವೆ. ಇಲ್ಲಿ ಪು. ಸ್ತ್ರೀ. ನಪು. ಮತ್ತು ಸರ್ವನಾಮ ಶಬ್ದಗಳಲ್ಲಿ ಪ್ರಮುಖ ಶಬ್ದಗಳನ್ನು ಕೊಡಲಾಗಿದೆ.

रामो हरिः करी भूभृत् भानुः कर्ता च चन्द्रमाः ।
तस्थिवान् भगवानात्मा दशैते पुंसिनायकाः ॥

### 1 अकारान्तः पुल्लिङ्गो राम-शब्दः

| एकवचनम् | द्विवचनम् | बहुवचनम् | विभक्तिः |
|---|---|---|---|
| रामः | रामौ | रामाः | प्रथमा |
| रामं | रामौ | रामान् | द्वितीया |

| | | | |
|---|---|---|---|
| रामेण | रामाभ्यां | रामैः | तृतीया |
| रामाय | रामाभ्यां | रामेभ्यः | चतुर्थी |
| रामात् | रामाभ्यां | रामेभ्यः | पंचमी |
| रामस्य | रामयोः | रामाणां | षष्ठी |
| रामे | रामयोः | रामेषु | सप्तमी |
| हे राम | हे रामौ | हे रामाः | सम्बोधनम् |

एवं सूर्यः, चन्द्रः, देवः, वृक्षः, शैलः, दीपः, शुकः, बालः, भूपः, गजः, हयः, जनकः, कायः, करः, दन्तः, पर्वतः, खगः, यागः, मेघः, शरः, सुरः बाणः, मुकुन्दादयः, अकारान्तपुल्लिङ्गशब्दाः ।

### 2 इ कारान्तः पुल्लिङ्गो हरि-शब्दः

| | | | |
|---|---|---|---|
| हरिः | हरी | हरयः | प्र० |
| हरिम् | हरी | हरीन् | द्वि० |
| हरिणा | हरिभ्यां | हरिभिः | तृ० |
| हरये | हरिभ्यां | हरिभ्यः | च० |
| हरेः | हरिभ्यां | हरिभ्यः | पं० |
| हरेः | हर्योः | हरीणां | ष० |
| हरौ | हर्योः | हरिषु | स० |
| हे हरे | हे हरी | हे हरयः | सम्बो० |

एवं रविः, कविः, कपिः, विधिः,निधिः, सूरिः, गिरिः, पविः,सुरपतिः,कुलपतिः,पशुपतिः,धनपतिः,सारथिः,अतिरथिः, महारथिः,भूपतिः, यतिः-इत्यादयः इकारान्तपुल्लिङ्गशब्दाः।

### 3 इन्नन्तः पुल्लिङ्गः करिन्-शब्दः

| | | | |
|---|---|---|---|
| करी | करिणौ | क रिणः | प्र० |
| करिणं | करिणौ | क रिणः | द्वि० |
| करिणा | करिभ्यां | करिभिः | तृ० |
| करिणे | करिभ्यां | करिभ्यः | च० |
| करिणः | करिभ्यां | करिभ्यः | पं० |
| करिणः | करिणोः | करिणाम् | ष० |
| करिणि | करिणोः | करिषु | स० |
| हे करिन् | हे करिणौ | हे करिणः | सम्बो० |

एवं मन्त्रिन्, तपस्विन्, गृहिन्, धनिन्, योगिन्, पिनाकिन्, चक्रिन्, शूलिन्, चक्रवर्तिन्, छत्रिन्, धर्मिन्, हस्तिन्, दण्डिन्,श्रृङ्गिन् इत्यादयः इन्नन्तपुल्लिङ्गशब्दाः।

## 4 त् कारान्तः पुल्लिङ्गो भूभृत्-शब्दः

| | | | |
|---|---|---|---|
| भूभृत्, भूभृद् | भूभृतौ | भूभृतः | प्र० |
| भूभृतं | भूभृतौ | भूभृतः | द्वि० |
| भूभृता | भूभृद्भ्याम् | भूभृद्भिः | तृ० |
| भूभृते | भूभृद्भ्याम् | भूभृद्भ्यः | च० |
| भूभृतः | भूभृद्भ्याम् | भूभृद्भ्यः | पं० |
| भूभृतः | भूभृतोः | भूभृताम् | ष० |
| भूभृति | भूभृतोः | भूभृत्सु | स० |
| हे भूभृत्,हे भूभृद् | हे भूभृतौ | हे भूभृतः | सम्बो० |

एवं परभृत्, विश्वजित्, मरुत्,हरित् धर्मभृत्, विपश्चित्, इत्यादयः त् कारान्ताः पुल्लिङ्गशब्दाः।

## 5 उ कारान्तः पुल्लिङ्गो भानु-शब्दः

| | | | |
|---|---|---|---|
| भानुः | भानू | भानवः | प्र० |
| भानुं | भानू | भानून् | द्वि० |
| भानुना | भानुभ्याम् | भानुभिः | तृ० |
| भानवे | भानुभ्याम् | भानुभ्यः | च० |
| भानोः | भानुभ्याम् | भानुभ्यः | पं० |
| भानोः | भान्वोः | भानूनां | ष० |
| भानौ | भान्वोः | भानुषु | स० |
| हे भानो | हे भानू | हे भानवः | सम्बो० |

एवं गुरुः, सूनुः, परशुः, धातुः, वायुः,बाहुः, साधुः, प्रभुः, ऊरुः, विष्णुः, शम्भुः, इषुः, शिशुः, पशुः, सिन्धुः, तन्तुः, पांसुः इत्यादयः उकारान्तपुल्लिङ्गशब्दाः ।

## 6 ऋ कारान्तः पुल्लिङ्गः कर्तृ-शब्दः

| | | | |
|---|---|---|---|
| कर्ता | कर्तारौ | कर्तारः | प्र० |
| कर्तारं | कर्तारौ | कर्तॄन् | द्वि० |

| | | | |
|---|---|---|---|
| कर्त्रा | कर्तृभ्याम् | कर्तृभिः | तृ0 |
| कर्त्रे | कर्तृभ्याम् | कर्तृभ्यः | च0 |
| कर्तुः | कर्तृभ्याम् | कर्तृभ्यः | पं0 |
| कर्तुः | कर्त्रोः | कर्तृणाम् | ष0 |
| कर्तरि | कर्त्रोः | कर्तृषु | स0 |
| हे कर्तः | हे कर्तारौ | हे कर्तारः | सम्0 |

एवं भ्रातृ, विधातृ, नेतृ,वक्तृ,श्रोतृ,नप्तृ,दातृ,भर्तृ,होतृ, शास्तृ, त्रातृ, क्षितृ, भक्षितृ, द्रष्टृ, गन्तृ, नियन्तृ, इत्यादयः ऋकारान्तपुल्लिङ्गशब्दाः।

## 7 स् कारान्तः पुल्लिङ्गः चन्द्रमस्-शब्दः

| | | | |
|---|---|---|---|
| चन्द्रमाः | चन्द्रमसौ | चन्द्रमसः | प्र0 |
| चन्द्रमसं | चन्द्रमसौ | चन्द्रमसः | द्वि0 |
| चन्द्रमसा | चन्द्रमोभ्याम् | चन्द्रमोभिः | तृ0 |
| चन्द्रमसे | चन्द्रमोभ्याम् | चन्द्रमोभ्यः | च0 |
| चन्द्रमसः | चन्द्रमोभ्याम् | चन्द्रमोभ्यः | पं0 |
| चन्द्रमसः | चन्द्रमसोः | चन्द्रमसाम् | ष0 |
| चन्द्रमसि | चन्द्रमसोः | चन्द्रमस्सु | स0 |
| हे चन्द्रमः | हे चन्द्रमसौ | हे चन्द्रमसः | सम्बो0 |

एवं वेधस्, सुमनस्, प्रचेतस्, वनौकस्, दिवौकस्, पुरोधस्, दूर्वासस्, नेहस्, विमनस्, उन्मनस्,जातवेदस्, विहायस्, नगौकस् नचिकेतस्, दुर्मनस्, त्यादयः स्कारान्त पुल्लिङ्ग शब्दाः ।

## 8 वस्वन्तः पुल्लिङ्गः तस्थिवस्-शब्दः

| | | | |
|---|---|---|---|
| तस्थिवान् | तस्थिवांसौ | तस्थिवांस | प्र0 |
| तस्थिवांसं | तस्थिवांसौ | तस्थुषः | द्वि |
| तस्थुषा | तस्थिवद्भ्याम् | तस्थिवद्भिः | तृ0 |
| तस्थुषे | तस्थिवद्भ्याम् | तस्थिवद्भ्यः | च0 |
| तस्थुषः | तस्थिवद्भ्याम् | तस्थिवद्भ्यः | पं0 |
| तस्थुषः | तस्थुषोः | तस्थुषाम् | ष0 |
| तस्थुषि | तस्थुषोः | तस्थिवत्सु | स0 |
| हे तस्थिवन् | हे तस्थिवांसौ | हे तस्थिवांसः | सम्बो0 |

एवं विद्वान्, सेदिवान्, जग्मिवस्, दाश्वास्, सुश्रुवस् इत्यादयः वस्वन्तपुल्लिङ्गशब्दाः।

9 वत्वन्तः पुल्लिङ्गो भगवत्-शब्दः

| | | | |
|---|---|---|---|
| भगवान् | भगवन्तौ | भगवन्तः | प्र0 |
| भगवन्तम् | भगवन्तौ | भगवतः | द्वि0 |
| भगवता | भगवद्भ्याम् | भगवद्भिः | तृ0 |
| भगवते | भगवद्भ्याम् | भगवद्भ्यः | च0 |
| भगवतः | भगवद्भ्याम् | भगवद्भ्यः | पं0 |
| भगवतः | भगवतोः | भगवताम् | ष0 |
| भगवति | भगवतोः | भगवत्सु | स0 |
| हे भगवन् | हे भगवन्तौ | हे भगवन्तः | सम्बो0 |

एवं भवत्, धनवत्, कृतवत्, बलवत्, गरुत्मत्, श्रुतवत्, विद्यावत्, धीमत्, श्रीमत्, महत्, श्रुतिमत् इत्यादयः वत्वन्ताः मत्वन्ताश्च पुल्लिङ्गशब्दाः।

10 न् कारान्तः पुल्लिङ्ग आत्मन्-शब्दः

| | | | |
|---|---|---|---|
| आत्मा | आत्मानौ | आत्मानः | प्र0 |
| आत्मानं | आत्मानौ | आत्मनः | द्वि0 |
| आत्मना | आत्मभ्याम् | आत्मभिः | तृ0 |
| आत्माने | आत्मभ्याम् | आत्मभ्यः | च0 |
| आत्मानः | आत्मभ्याम् | आत्मभ्यः | पं0 |
| आत्मनः | आत्मानोः | आत्मनाम् | ष0 |
| आत्मनि | आत्मनोः | आत्मसु | स0 |
| हे आत्मन् | हे आत्मानौ | हे आत्मानः | सम्बो0 |

एवं सुधन्वन्, यक्ष्मन्, द्विजन्मन्, यज्वन्, ब्रह्मन्, सुशर्मन्, कृष्णवर्मन्, तक्ष ಮುಂ. ಹಿಂದೆ ಮಕಾರ, ವಕಾರವುಳ್ಳ, ಒತ್ತಕ್ಷರವಿದ್ದ ನಕಾರಾಂತ ಪು. ಶಬ್ದಗಳನ್ನು ಇದರಂ ನಡೆಸಬೇಕು.

स्त्रीलिङ्ग शब्दाः

रमा-रुचिर्नदी-धेनुर्वाग्धीःसरिदनन्तरम् ।
क्षुत् प्रावृट् च शरच्चैव दशैताः स्त्रीषु नायिकाः ।।

### 11 आ कारान्तः स्त्रीलिङ्गो रमा-शब्दः

| | | | |
|---|---|---|---|
| रमा | रमे | रमाः | प्र० |
| रमाम् | रमे | रमाः | द्वि० |
| रमया | रमाभ्याम् | रमाभिः | तृ० |
| रमायै | रमाभ्याम् | रमाभ्यः | च० |
| रमायाः | रमाभ्याम् | रमाभ्यः | पं० |
| रमायाः | रमयोः | रमाणाम् | ष० |
| रमायाम् | रमयोः | रमासु | स० |
| हे रमे | हे रमे | हे रमाः | सम्बो० |

एवं गंगा, शाला, निशा, दिशा, बाला, माला, क्षमा, माया, नासिका, कन्या, दया, रेखा, लज्जा, कला, विजया, महिला, रामा, विद्यादयः आकारान्त स्त्रीलिङ्गशब्दाः।

### 12 इ कारान्तः स्त्रीलिङ्गो रुचि-शब्दः

| | | | |
|---|---|---|---|
| रुचिः | रुची | रुचयः | प्र० |
| रुचिम् | रुची | रुचीः | द्वि० |
| रुच्या | रुचिभ्यां | रुचभिः | तृ० |
| रुच्यै, रुचये | रुचिभ्यां | रुचिभ्यः | च० |
| रुच्याः, रुचेः | रुचिभ्यां | रुचिभ्यः | पं० |
| रुच्याः, रुचेः | रुच्योः | रुचीनाम् | ष० |
| रुच्याम्, रुचौ, | रुच्योः | रुचिषु | स० |
| हे रुचे | हे रुची | हे रुचयः | सम्बो० |

एवं कृतिः, धृतिः, श्रुतिः, भृतिः, मतिः, भूमिः,बुद्धिः, नीतिः, प्रकृतिः, विकृतिः, स्तुतिः, रतिः, स्मृतिः, मृतिः, क्षितिः, भूतिः,राजिः-इत्यादयः इ कारान्त स्त्रीलिङ्गशब्दाः

### 13 ई कारान्तः स्त्रीलिङ्गो नदी-शब्दः

| | | | |
|---|---|---|---|
| नदी | नद्यौ | नद्यः | प्र० |
| नदीम् | नद्यौ | नदीः | द्वि० |
| नद्या | नदीभ्यां | नदीभिः | तृ० |
| नद्यै | नदीभ्यां | नदीभ्यः | च० |

| | | | |
|---|---|---|---|
| नद्याः | नदीभ्यां | नदीभ्यः | पं0 |
| नद्याः | नद्योः | नदीनाम् | ष0 |
| नद्याम् | नद्योः | नदीषु | स0 |
| हे नदि | हे नद्यौ | हे नद्यः | सम्बो0 |

एवं पृथ्वी, कुमारी, लक्ष्मीः, देवी, शैली, काली, तरुणी, वाणी, पुत्री, जननी, भगिनी, रजनी, सुन्दरी, महिषी, रुद्राणी, श्रेणी,तटी गौर्यादयः ई कारान्तस्त्रीलिङ्गशब्दाः।

### 14 उ कारान्तः स्त्रीलिङ्गो धेनु-शब्दः

| | | | |
|---|---|---|---|
| धेनुः | धेनू | धेनवः | प्र0 |
| धेनुम् | धेनू | धेनूः | द्वि0 |
| धेन्वा | धेनुभ्यां | धेनुभिः | तृ0 |
| धेन्वै, धेनवे | धेनुभ्यां | धेनुभ्यः | च0 |
| धेन्वाः, धेनोः | धेनुभ्यां | धेनुभ्यः | पं0 |
| धेन्वाः, धेनोः | धेन्वोः | धेनूनाम् | ष0 |
| धेन्वाम्, धेनौ | धेन्वोः | धेनुषु | स0 |
| हे धेनो | हे धेनू | हे धेनवः | सम्बो0 |

एवं स्नायुः, रज्जुः, हनुः, तनुः,चञ्चुः, इत्यादयः उ कारांत स्त्रीलिङ्गशब्दाः।

### 15 च् कारान्तः स्त्रीलिङ्गो वाक्-शब्दः

| | | | |
|---|---|---|---|
| वाक्, वाग् | वाचौ | वाचः | प्र0 |
| वाचम् | वाचौ | वाचः | द्वि0 |
| वाचा | वाग्भ्यां | वाग्भिः | तृ0 |
| वाचे | वाग्भ्यां | वाग्भ्यः | च0 |
| वाचः | वाग्भ्यां | वाग्भ्यः | पं0 |
| वाचः | वाचोः | वाचाम् | ष0 |
| वाचि | वाचोः | वाक्षु | स0 |
| हे वाक्,वाग् | हे वाचौ | हे वाचः | सम्बो0 |

एवं शुच्,त्वच्,पयोमुच्, सत्यवाच्, इत्यादयः च् कारान्त स्त्रीलिङ्गशब्दाः।

### 16 ई कारान्तः स्त्रीलिङ्गो धी-शब्दः

| | | | |
|---|---|---|---|
| धीः | धियौ | धियः | प्र0 |
| धियम् | धियौ | धियः | द्वि0 |
| धिया | धीभ्यां | धीभिः | तृ0 |
| धियै, धिये | धीभ्यां | धीभ्यः | च0 |
| धियाः,धियः | धीभ्यां | धीभ्यः | पं0 |
| धियाः,धियः | धियोः | धीनाम्,धियाम् | ष0 |
| धियां, धियि | धियोः | धीषु | स0 |
| हे धीः | हे धियौ | हे धियः | सम्बो0 |

एवं श्रीः,भीः, ह्रीः, स्त्री, इत्यादयः ई कारान्त स्त्रीलिङ्ग शब्दाः ।

### 17 त् कारान्तः स्त्रीलिङ्गः सरित्-शब्दः

| | | | |
|---|---|---|---|
| सरित् सरिद् | सरितौ | सरितः | प्र0 |
| सरितं | सरितौ | सरितः | द्वि0 |
| सरिता | सरिद्भ्यां | सरिद्भिः | तृ0 |
| सरिते | सरिद्भ्यां | सरिद्भ्यः | च0 |
| सरितः | सरिद्भ्यां | सरिद्भ्यः | पं0 |
| सरितः | सरितोः | सरिताम् | ष0 |
| सरिति | सरितोः | सरित्सु | स0 |
| हे सरित् सरिद् | हे सरितौ | हे सरितः | सम्बो0 |

एवं हरित्,तडित्,संवित् इत्यादयः त्कारान्तस्त्रीलिङ्गशब्दाः।

### 18 ध् कारान्तः स्त्रीलिङ्गः क्षुध्-शब्दः

| | | | |
|---|---|---|---|
| क्षुत्, क्षुध् | क्षुधौ | क्षुधः | प्र0 |
| क्षुधं | क्षुधौ | क्षधः | द्वि0 |
| क्षुधा | क्षुद्भ्यां | क्षुद्भिः | तृ0 |
| क्षुधे | क्षुद्भ्यां | क्षुद्भ्यः | च0 |
| क्षुधः | क्षुद्भ्यां | क्षुद्भ्यः | पं0 |
| क्षुधः | क्षुधोः | क्षुधाम् | ष0 |
| क्षुधि | क्षुधोः | क्षुत्सु | स0 |
| हे क्षुत्, क्षुध् | हे क्षुधौ | हे क्षुधः | सम्बो0 |

एवं समिध्,युयुध्, क्रुध्,सुसमिध्,द्कारान्तस्त्रीलिङ्गशब्दाः।

## 19 ष् कारान्तः स्त्रीलिङ्गः प्रावृष्-शब्दः

| | | | |
|---|---|---|---|
| प्रावृट्, प्रावृड् | प्रवृषौ | प्रावृषः | प्र0 |
| प्रावृषं | प्रावृषौ | प्रावृषः | द्वि0 |
| प्रावृषा | प्रावृड्भ्यां | प्रावृड्भिः | तृ0 |
| प्रावृषे | प्रावृड्भ्यां | प्रावृड्भ्यः | च0 |
| प्रावृषः | प्रावृड्भ्यां | प्रावृड्भ्यः | पं0 |
| प्रावृषः | प्रावृषोः | प्रावृषाम् | ष0 |
| प्रावृषि | प्रावृषोः | प्रावृट्सु | स0 |
| हे प्रावृट्,प्रावृड् | हे प्रावृषौ | हे प्रावृषः | सम्0 |

एवं त्विष्,मुष्,विष्,रत्नमुष्,रुष्, तृष् इत्यादयः ष् कारान्तस्त्रीलिङ्ग शब्दाः।

## 20 द् कारान्तः स्त्रीलिङ्गः शरद्-शब्दः

| | | | |
|---|---|---|---|
| शरत्, शरद् | शरदौ | शरदः | प्र0 |
| शरदं | शरदौ | शरदः | द्वि0 |
| शरदा | शरद्भ्यां | शरद्भिः | तृ0 |
| शरदे | शरद्भ्यां | शरद्भ्यः | च0 |
| शरदः | शरद्भ्यां | शरद्भ्यः | पं0 |
| शरदः | शरदोः | शरदाम् | ष0 |
| शरदि | शरदोः | शरत्सु | स0 |
| हे शरद् शरद् | हे शरदौ | हे शरदः | सम्बो0 |

एवं सम्पद्,विपद्,तमोनुद्,दृषद्,बेभिद्,चेच्छिद् इत्यादयः दकारान्तस्त्रीलिङ्गशब्दाः।

## नपुंसकल्लिङ्ग शब्दाः

ज्ञानं दधि पयो वर्म धनुर्वारि जगत् तथा ।
मधु नाम मनोहारि दशैतानि नपुंसके ।।

## 21 अ कारान्तो नपुंसकलिङ्गो ज्ञान-शब्दः

| | | | |
|---|---|---|---|
| ज्ञानं | ज्ञाने | ज्ञानानि | प्र0 |
| ज्ञानं | ज्ञाने | ज्ञानानि | द्वि0 |
| ज्ञानेन | ज्ञानाभ्यां | ज्ञानैः | तृ0 |
| ज्ञानाय | ज्ञानाभ्यां | ज्ञानेभ्यः | च0 |

| | | | |
|---|---|---|---|
| ज्ञानात् | ज्ञानाभ्यां | ज्ञानेभ्यः | पं0 |
| ज्ञानस्य | ज्ञानयोः | ज्ञानानाम् | ष0 |
| ज्ञाने | ज्ञानयोः | ज्ञानेषु | स0 |
| हे ज्ञान | हे ज्ञाने | हे ज्ञानानि | सम्बो0 |

एवं गृहं, रत्नं, मित्रं, पात्रं, धनं, जलं, नेत्रं, शीर्षं, फलं, क्षेत्रं, मित्रं, सुखं, दुःखं, मुखं, अङ्गं, गात्रं, भोजनं, कार्यं, कारणं, कुलं, वित्तं, सुमं, पुष्पं, शरीरं, वनादयः अ कारान्तनपुंसकलिङ्ग शब्दाः ।

### 22 इ कारान्तो नपुंसकलिङ्गो दधि (ಮೊಸರು) -शब्दः

| | | | |
|---|---|---|---|
| दधि | दधिनी | दधीनि | प्र0 |
| दधि | दधिनी | दधीनि | द्वि |
| दध्ना | दधिभ्यां | दधिभिः | तृ0 |
| दध्ने | दधिभ्यां | दधिभ्यः | च0 |
| दध्नः | दधिभ्यां | दधिभ्यः | पं0 |
| दध्नः | दध्नोः | दध्नां | ष0 |
| दध्नि,दधनि | दध्नोः | दधिषु | स0 |
| हे दधे,दधि | हे दधिनी | हे दधीनि | सम्बो0 |

एवं अस्थि,सक्थि,अक्षि इत्यादयः इकारान्त नपुंसकलिङ्ग शब्दाः।

### 23 सकारान्तो नपुंसकलिङ्गः पयस्-शब्दः

| | | | |
|---|---|---|---|
| पयः | पयसी | पयांसि | प्र0 |
| पयः | पयसी | पयांसि | द्वि0 |
| पयसा | पयोभ्यां | पयोभिः | तृ0 |
| पयसे | पयोभ्यां | पयोभ्यः | च0 |
| पयसः | पयोभ्यां | पयोभ्यः | पं0 |
| पयसः | पयसोः | पयसां | ष0 |
| पयसि | पयसोः | पयस्सु | स0 |
| हे पयः | हे पयसी | हे पयांसि | सम्बो0 |

एवं मनस्, रजस्, वक्षस्, उरस्, पयस्, रक्षस्, वचस्, वर्चस्, शिरस्, श्रेयस्, यशस्, रोधस्, महस्, रोचिस्, ज्योतिस्, शोचिस्, अहस्, रंहस्, तमस् इत्यादयः स् कारान्त-नपुंसकलिङ्गशब्दाः ।

## 24 नान्तो नपुंसकलिङ्गो वर्मन्-शब्दः

| | | | |
|---|---|---|---|
| वर्म | वर्मणी | वर्माणि | प्र0 |
| वर्म | वर्मणी | वर्माणि | द्वि0 |
| वर्मणा | वर्मभ्यां | वर्मभिः | तृ0 |
| वर्मणे | वर्मभ्यां | वर्मभ्यः | च0 |
| वर्मणः | वर्मभ्यां | वर्मभ्यः | पं0 |
| वर्मणः | वर्मणोः | वर्मणां | ष0 |
| वर्मणि | वर्मणोः | वर्मसु | स0 |
| हे वर्मन्, वर्म | हे वर्मणी | हे वर्माणि | सम्बो0 |

एवं बह्मन्,शर्मन्,कर्मन्,जन्मन्,हेमन्,दामन्, वेश्मन्, चर्मन्,नर्मन्, मर्मन्, इत्यादयः न-कारान्त-नपुसकलिङ्ग शब्दाः।

## 25 सान्तो नपुंसकलिङ्गो धनुस्-शब्दः

| | | | |
|---|---|---|---|
| धनुः | धनुषी | धनूंषि | प्र0 |
| धनुः | धनुषी | धनूंषि | द्वि0 |
| धनुषा | धनुर्भ्यां | धनुर्भिः | तृ0 |
| धनुषे | धनुर्भ्यां | धनुर्भ्यः | च0 |
| धनुषः | धनुर्भ्यां | धनुर्भ्यः | पं0 |
| धनुषः | धनुषोः | धनुषां | ष0 |
| धनुषि | धनुषोः | धनुष्षु | स0 |
| हे धनुः | हे धनुषी | हे धनूंषि | संम्बो0 |

एवं हविस्,अर्चिस्,आयुस्,चक्षुस्,इत्यादयः सकारान्त नपुसकलिङ्गशब्दाः।

## 26 इ कारान्तो नपुंसकलिङ्गो वारि-शब्दः

| | | | |
|---|---|---|---|
| वारि | वारिणी | वारीणि | प्र0 |
| वारि | वारिणी | वारीणि | द्वि0 |
| वारिणा | वारिभ्यां | वारिभिः | तृ0 |
| वारिणे | वारिभ्यां | वारिभ्यः | च0 |
| वारिणः | वारिभ्यां | वारिभ्यः | पं0 |
| वारिणः | वारिणोः | वारीणाम् | ष0 |

| | | | |
|---|---|---|---|
| वारिणि | वारिणोः | वारिषु | स0 |
| हे वारे,वरि | हे वारिणी | हे वारीणि | सम्बो0 |

एवं करांघ्रि,पादपाणि,अनादि,इत्यादयः इ कारान्त नपुसकलिङ्ग शब्दाः।

### 27 त् कारान्तनपुंसकलिङ्गो जगत्-शब्दः

| | | | |
|---|---|---|---|
| जगत् | जगती | जगन्ति | प्र0 |
| जगत् | जगती | जगन्ति | द्वि0 |
| जगता | जगद्भ्यां | जगद्भिः | तृ0 |
| जगते | जगद्भ्यां | जगद्भ्यः | च0 |
| जगतः | जगद्भ्यां | जगद्भ्यः | पं0 |
| जगतः | जगतोः | जगतां | ष0 |
| जगति | जगतोः | जगत्सु | स0 |
| हे जगत् | हे जगती | हे जगन्ति | सम्बो0 |

एवं तुदत्-शासत्-जाग्रत्, चकासत्, दधत्, उल्लसत्, मुदत् इत्यादयः त् कारान्त नपुंसकलिङ्गशब्दाः।

### 28 उ कारान्त नपुंसकलिङ्गो मधु-शब्दः

| | | | |
|---|---|---|---|
| मधु | मधुनी | मधूनि | प्र0 |
| मधु | मधुनी | मधूनी | द्वि0 |
| मधुना | मधुभ्यां | मधुभिः | तृ0 |
| मधुने | मधुभ्यां | मधुभ्यः | च0 |
| मधुनः | मधुभ्यां | मधुभ्यः | पं0 |
| मधुनः | मधुनोः | मधुनाम् | ष0 |
| मधुनि | मधुनोः | मधुषु | स0 |
| हे मधो,मधु | हे मधुनी | हे मधूनि | सम्बो0 |

एवं वस्तु,जानु,अश्रु,स्मश्रु,अम्बु,अक्षु,वसु,सानु, इत्यादयः उ कारान्त-नपुंसकलिङ्गशब्दाः।

### 29 न कारान्त नपुंसकलिङ्गो नामन्-शब्दः

| | | | |
|---|---|---|---|
| नाम | नामनी, नाम्नी | नामानि | प्र0 |
| नाम | नामनी, नाम्नी | नामानि | द्वि0 |

| | | | |
|---|---|---|---|
| नाम्ना | नामभ्यां | नामभिः | तृ० |
| नाम्ने | नामभ्यां | नामभ्यः | च० |
| नाम्नः | नामभ्यां | नामभ्यः | पं० |
| नाम्नः | नाम्नोः | नाम्नां | ष० |
| नाम्नि,नामनि | नाम्नोः | नामसु | स० |
| हे नाम,नामन् | हे नामनी,नाम्नी | हे नामानि | सम्बो० |

एवं धामन्, लोमन्, दामन्, व्योमन्, प्रेमन् इत्यादय नकारान्तनपुंसकलिङ्गशब्दाः।

### 30 इन्नन्त नपुंसकलिङ्गो मनोहारिन्-शब्दः

| | | | |
|---|---|---|---|
| मनोहारि | मनोहारिणी | मनोहारीणि | प्र० |
| मनोहारि | मनोहारिणी | मनोहारीणि | द्वि० |
| मनोहारिणा | मनोहारिभ्यां | मनोहारिभिः | तृ० |
| मनोहारिणे | मनोहारिभ्यां | मनोहारिभ्यः | च० |
| मनोहारिणः | मनोहारिभ्यां | मनोहारिभ्यः | पं० |
| मनोहारिणः | मनोहारिणोः | मनोहारिणाम् | ष० |
| मनोहारिणि | मनोहारिणोः | मनोहारिषु | स० |
| हे मनोहारिन् | हे मनोहारिणी | हे मनोहारीणी | सम्बो० |

एवं स्त्रग्विन्, इत्यादयः इन्नन्तनपुंसकलिङ्गशब्दाः।

**सर्वनामशब्दाः** - स सा तद्यश्च या यच्च कः का किम् त्वमहं त्वयम्।
इयं चैदं चैष चैषा चैतत् चासावसावदः ॥

### 31 द् कारान्तः त्रिषुलिङ्गेषु सरूपो युष्मद्-शब्दः

| | | | |
|---|---|---|---|
| त्वं | युवां | यूयं | प्र० |
| त्वां, त्वा | युवां, वां | युष्मान् वः | द्वि० |
| त्वया | युवाभ्यां | युष्माभिः | तृ० |
| तुभ्यं,ते | युवाभ्यां,वां | युष्मभ्यं वः | च० |
| त्वत् | युवाभ्यां | युष्मत् | पं० |
| तव, ते | युवयोः,वां | युष्माकं वः | ष० |
| त्वयि | युवयोः | युष्मासु | स० |

## 32 द् कारान्तः त्रिषुलिङ्गेषु सरूपो अस्मद्-शब्दः

| | | | |
|---|---|---|---|
| अहं | आवां | वयम् | प्र0 |
| मां,मा | आवां,नौ | अस्मान्,नः | द्वि0 |
| मया | आवाभ्यां | अस्माभिः | तृ0 |
| मह्यं,मे | आवाभ्यां,नौ | अस्मभ्यं,नः | च0 |
| मत् | आवाभ्यां | अस्मत् | पं0 |
| मम,मे | आवयोः,नौ | अस्मांकं,नः | ष0 |
| मयि | आवयोः | अस्मासु | स0 |

## 33 द् कारान्तः पुल्लिङ्गः तद्-शब्दः

| | | | |
|---|---|---|---|
| सः | तौ | ते | प्र0 |
| तं | तौ | तान् | द्वि0 |
| तेन | ताभ्यां | तैः | तृ0 |
| तस्मै | ताभ्यां | तेभ्यः | च0 |
| तस्मात् | ताभ्यां | तेभ्यः | पं0 |
| तस्य | तयोः | तेषां | ष0 |
| तस्मिन् | तयोः | तेषु | स0 |

## 34 द् कारान्तः स्त्रीलिङ्गः तद्-शब्दः

| | | | |
|---|---|---|---|
| सा | ते | ताः | प्र0 |
| तां | ते | ताः | द्वि0 |
| तया | ताभ्यां | ताभिः | तृ0 |
| तस्यै | ताभ्यां | ताभ्यः | च0 |
| तस्याः | ताभ्यां | ताभ्यः | पं0 |
| तस्याः | तयोः | तासां | ष0 |
| तस्यां | तयोः | तासु | स0 |

## 35 द् कारान्त नपुंसकलिङ्गः तद्-शब्दः

| | | | |
|---|---|---|---|
| तत् | ते | तानि | प्र0 |
| तत् | ते | तानि | द्वि0 |
| तेन | ताभ्यां | तैः | तृ0 |
| तस्मै | ताभ्यां | तेभ्यः | च0 |

| | | | |
|---|---|---|---|
| तस्मात् | ताभ्यां | तेभ्यः | पं0 |
| तस्य | तयोः | तेषां | ष0 |
| तस्मिन् | तयोः | तेषु | स0 |

सामान्येन सर्वनाम्नां सम्बोधनं नास्ति ।

### 36 द् कारान्तः पुल्लिङ्गो यद्-शब्दः

| | | | |
|---|---|---|---|
| यः | यौ | ये | प्र0 |
| यं | यौ | यान् | द्वि0 |
| येन | याभ्यां | यैः | तृ0 |
| यस्मै | याभ्यां | येभ्यः | च0 |
| यस्मात् | याभ्यां | येभ्यः | पं0 |
| यस्य | ययोः | येषां | ष0 |
| यस्मिन् | ययोः | येषु | स0 |

### 37 द् कारान्तः स्त्रीलिंङ्गो यद्-शब्दः

| | | | |
|---|---|---|---|
| या | ये | याः | प्र0 |
| यां | ये | याः | द्वि0 |
| यया | याभ्यां | याभिः | तृ0 |
| यस्यै | याभ्यां | याभ्यः | च0 |
| यस्याः | याभ्यां | याभ्यः | पं0 |
| यस्याः | ययोः | यासाम ` | ष0 |
| यस्यां | ययोः | यासु | स0 |

### 38 द् कारान्तो नपुंसकलिङ्गो यद्-शब्दः

| | | | |
|---|---|---|---|
| यत् | ये | यानि | प्र0 |
| यत् | ये | यानि | द्वि0 |

शेषरूपाणि पुल्लिङ्गवत्।

### 39 म् कारान्तः पुल्लिङ्गः किम्-शब्दः

| | | | |
|---|---|---|---|
| कः | कौ | के | प्र0 |
| कं | कौ | कान् | द्वि0 |

शेषरूपाणि तत् शब्दस्य रूपाणि इव।

### 40 म् कारान्तः स्त्रीलिङ्गः किम्-शब्दः

| | | | |
|---|---|---|---|
| का | के | काः | प्र० |
| कां | के | काः | द्वि० |

शेषरूपाणि तत् शब्दस्य स्त्रीलिङ्ग रूपाणि इव।

### 41 म् कारान्तः नपुंसकलिङ्गः किम्-शब्दः

| | | | |
|---|---|---|---|
| किं | के | कानि | प्र० |
| किं | के | कानि | द्वि० |

शेषरूपाणि तत् शब्दस्य नपुंसकलिङ्ग रूपाणि इव।

### 42 स् कारान्तः पुल्लिङ्गः अदस्-शब्दः

| | | | |
|---|---|---|---|
| असौ | अमू | अमी | प्र० |
| अमुं | अमू | अमून् | द्वि० |
| अमुना | अमूभ्यां | अमीभिः | तृ० |
| अमुष्मै | अमूभ्यां | अमीभ्यः | च० |
| अमुष्मात् | अमूभ्यां | अमीभ्यः | पं० |
| अमुष्य | अमुयोः | अमीषां | ष० |
| अमुष्मिन् | अमुयोः | अमीषु | स० |

### 43 स् कारान्तः स्त्रीलिङ्गः अदस्-शब्दः

| | | | |
|---|---|---|---|
| असौ | अमू | अमूः | प्र० |
| अमुं | अमू | अमूः | द्वि० |
| अमुया | अमूभ्यां | अमूभिः | तृ० |
| अमुष्यै | अमूभ्यां | अमूभ्यः | च० |
| अमुष्याः | अमूभ्यां | अमूभ्यः | पं० |
| अमुष्य | अमुयोः | अमूषां | ष० |
| अमुष्यां | अमुयोः | अमूषु | स० |

### 44 स् कारान्तो नपुंसकलिङ्गः अदस्-शब्दः

| | | | |
|---|---|---|---|
| अदः | अमू | अमूनि | प्र० |
| अदः | अमू | अमूनि | द्वि० |

शेषरूपाणि पुल्लिङ्गवत्।

## 45 म् कारान्तः पुल्लिङ्ग इदं-शब्दः

| | | | |
|---|---|---|---|
| अयं | इमौ | इमे | प्र० |
| इमं,एनं | इमौ, एनौ | इमान्,एनान् | द्वि० |
| अनेन,एनेन | आभ्यां | एभिः | तृ० |
| अस्मै | आभ्यां | एभ्यः | च० |
| अस्मात् | आभ्यां | एभ्यः | पं० |
| अस्य | अनयो,एनयोः | एषाम् | ष० |
| अस्मिन् | अनयो,एनयोः | एषु | स० |

## 46 म् कारान्तः स्त्रीलिङ्ग इदं-शब्दः

| | | | |
|---|---|---|---|
| इयं | इमे | इमाः | प्र० |
| इमां, एनां | इमे, एने | इमाः, एनाः | द्वि० |
| अनया,एनया | आभ्यां | आभिः | तृ० |
| अस्यै | आभ्यां | आभ्यः | च० |
| अस्याः | आभ्यां | आभ्यः | पं० |
| अस्याः | अनयोः,एनयोः | आसाम् | ष० |
| अस्यां | अनयोः,एनयोः | आसु | स० |

## 47 म् कारान्तो नपुंसकलिङ्ग इदं-शब्दः

| | | | |
|---|---|---|---|
| इदं | इमे | इमानि | प्र० |
| इदं,एनत् | इमे, एने | इमानि,एनानि | द्वि० |

शेषरूपाणि पुल्लिङ्गवत्।

## 48 द् कारान्तः पुल्लिङ्ग एतद्-शब्दः

| | | | |
|---|---|---|---|
| एषः | एतौ | एते | प्र० |
| एतं, एनं | एतौ, एनौ | एतान्, एनान् | द्वि० |
| एतेन, एनेन | एताभ्यां | एतैः | तृ० |
| एतस्मै | एताभ्यां | एतेभ्यः | च० |
| एतस्मात् | एताभ्यां | एतेभ्यः | पं० |
| एतस्य | एतयोः,एनयोः | एतेषां | ष० |
| एतस्मिन् | एतयोः,एनयोः | एतेषु | स० |

### 49 द् कारान्तः स्त्रीलिङ्ग एतद्-शब्दः

| | | | |
|---|---|---|---|
| एषा | एते | एताः | प्र0 |
| एतां,एनां | एते,एने | एताः,एनाः | द्वि0 |
| एतया,एनया | एताभ्यां | एताभिः | तृ0 |
| एतस्यै | एताभ्यां | एताभ्यः | च0 |
| एतस्याः | एताभ्यां | एताभ्यः | पं0 |
| एतस्याः | एतयोः,एनयोः | एतासां | ष0 |
| एतस्यां | एतयोः,एनयोः | एतासु | स0 |

### 50 द् कारान्तो नपुंसकलिङ्ग एतद्-शब्दः

| | | | |
|---|---|---|---|
| एतत् | एते | एतानि | प्र0 |
| एतत्,एनत् | एते,एने | एतानि,एनानि | द्वि0 |

शेषरूपाणि पुल्लिङ्गवत्।

इदं ಮತ್ತು एतत्, अदस् ಮತ್ತು तत् ಈ ಶಬ್ದಗಳನ್ನು ಇದು ಮತ್ತು ಅದು ಎಂಬ ...ದಲ್ಲಿ ಬಳಸಲಾಗುವದು. ಅತ್ಯಂತ ಸಮೀಪದಲ್ಲಿದ್ದ ವಸ್ತುವನ್ನು ಉದ್ದೇಶಿಸಿ ಹೇಳುವಾಗ ...त् ಎಂದು ಪ್ರಯೋಗಿಸಬೇಕು. ಸ್ವಲ್ಪ ದೂರದಲ್ಲಿದ್ದಾಗ इदं ಎಂದೂ, ಹೆಚ್ಚು ದೂರದಲ್ಲಿ ...ಗೆ ಕಾಣುವಂತಹದಿರುವಾಗ अदस् ಬಳಸಬೇಕು. ಪ್ರತ್ಯಕ್ಷವಿರದೇ ಇದ್ದ ವಸ್ತುವನ್ನು ಉದ್ದೇಶಿಸ ...ುವಾಗ तत् ಎಂದು ಹೇಳಬೇಕು. ಈ ಶ್ಲೋಕವನ್ನು ಕಂಠಪಾಠ ಮಾಡಿರಿ.

इदमस्तु सन्निकृष्टं समीपतरवर्ति चैतदो रूपम्।
अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्।।

### 51 अकारान्तः पुल्लिङ्गः सर्वनामसंज्ञकः सर्व शब्दः

| | | | |
|---|---|---|---|
| सर्वः | सर्वौ | सर्वे | प्र0 |
| सर्वम् | सर्वौ | सर्वान् | द्वि0 |
| सर्वेण | सर्वाभ्यां | सर्वैः | तृ0 |
| सर्वस्मै | सर्वाभ्यां | सर्वेभ्यः | च0 |
| सर्वस्मात् | सर्वाभ्यां | सर्वेभ्यः | पं0 |
| सर्वस्य | सर्वयोः | सर्वेषां | ष0 |
| सर्वस्मिन् | सर्वयोः | सर्वेषु | स0 |
| हे सर्व | हे सर्वौ | हे सर्वे | संबो0 |

एवं कतर, कतम, यतर,एकतर, एकतम,इतर, ततर, ततम सम, अन्य, ...,एक, अन्य,अन्यतर इत्यादयः ।

